सामवेदस्य

# आरण्यसंहिता ।

---

श्रीमत् सायणाचार्य्यकृतभाष्यसहिता ।

---

पण्डितकुलपतिना

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृता प्रकाशिता च ।

द्वितीयसंस्करणम् ।



कलिकातानगर्य्यां

सरस्वतीयन्त्रे

मुद्रिता ।

---

ई १८८१ ।

# आरण्य-संहिता।

ओं नमः सामवेदाय।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
कृपालुः सायणाचार्यो वेदार्थं वक्तुमुद्यतः ।
आरण्यकाभिधः षष्ठोऽध्यायो(क) व्याक्रियतेऽधुना ॥ ३ ॥
तत्रेन्द्रेत्यादिकानान्तु पञ्चपञ्चाशतां क्रमात् ।
ऋषिच्छन्दोदैवतञ्च तत्र तत्राभिदध्महे ॥ ४ ॥
तत्राद्याया ऋचो द्रष्टा भरद्वाजः प्रकीर्तितः ।
द्वितीयस्य वसिष्ठः स्यात्, तृतीयाया ऋचः स्मृतः ॥ ५ ॥
वामदेवस्ततश्छन्दो बृहती त्रिष्टुबेव च ।
गायत्रीति क्रमादिन्द्रो भवेत् तिसृषु देवता ॥ ६ ॥

---

(क) अथ आर्चिक-ग्रन्थ इति विवरणादि-सकल-ग्रन्थ-सम्मता वैदिक-सम्प्रदायानुगताः पुस्तकादाना समीचीनेनोपलभ्यन्ते । तथाच षडध्यायकश्छन्दो नाम एकं, अपरो नवाध्यायात्मक उत्तरः, तन्मध्यगतन्तु षष्ठोऽध्यायैकात्मकम् आरण्यक इति अवगम्यते । सायण-मते तु नैवम् । अयं हि षष्ठोपप्रपाठकैरेव छन्दोग्रन्थं परिसमाप्य तदीय षष्ठोपभाग एव इति मन्यते ।

## प्रथम-खण्डे—

तत्र प्रथमा ।

भरद्वाजऋषि, बृहतीछन्दः, इन्द्रोदेवता ।

२ १ ३ १ २ ३ २ १ २ ३ ३ १ २ ३ ३ २
ओम् । इन्द्रज्येष्ठन्नआभरआेजिष्ठम्पुपुरिश्रवः ।
३२ ३२ २ ३ २ ३ ३ २ ३२
यद्दिधृक्षेमवज्रहस्त (१) रोदसीउभेसुशिप्रपप्राः

॥ १ ॥

हे 'इन्द्र' ! (त) 'ज्येष्ठ' प्रशस्यतमम् 'ओजिष्ठम्' अतिशयेन बलकरम् 'पुपुरि' पूरकं 'श्रव' अन्न 'न' अस्मभ्यम् 'आभर' आहर प्रयच्छ । हे 'वज्रहस्त' ! वज्रबाहो ! हे 'सुशिप्र' ! शोभनहनुक ! एवम्भूत ! हे इन्द्र ! 'यत्' अन्न 'दिधृक्षेम' धारयितुमिच्छेम, यच्चान्नम् इमे परिदृश्यमाने 'उभे रोदसी' द्यावापृथिव्यौ 'आ पप्राः' आ पूरयसि, तदन्नमाहरेत्यन्वय ॥१॥

अथ द्वितीया ।

वसिष्ठऋषि, त्रिष्टुप्छन्द, इन्द्रोदेवता ।

२ ३ १ २ ३ २ ३ ३२ ३२ ३ २ २ ३ ३ १
इन्द्रोराजाजगतश्चर्षणीनामधिक्षमाविश्वरूपं-
३ २ ३ २ २ ३ ३ ३ १ ३ १ ४ २ ३ १
यदस्य । ततोददातिदाशुषेवसूनिचोदद्राधउप-

---

(१) "येनेमेचित्रवज्रहस्त"—इति बह्वृचां पाठ ।

(त) "इन्द्रत्रैष्टुभं-कर्ण्य"-इति नैगमम् स्का० ।०म० द्य१ ईश्वरस्यार्थमिति बहुप्रमाण ।

२ १
सुतं चिदर्वाक् ॥ २ ॥

य 'इन्द्र' 'जगतो' अङ्गमस्य पश्चादे यतो 'राजा' ईश्वरो भवति चर्षणीनां मनुष्याणां च राजा भवति। किञ्च। अभिक्षमा (सप्तम्येकवचनस्य लुक्) क्षमायां (ग) 'विश्वरूपं' 'यत्' धनमस्ति तस्यापि राजा भवति। 'ततो' ददाति दाशुषे वसूनि' यजमानाय वसूनि धनानि ददाति। स इन्द्रोऽस्माभि उपस्तुतं सम्यक् स्तुत राध' धन 'अर्वाग्' अस्मदभिमुख 'चोदत्' प्रेरयतु। २।

अथ तृतीया।

वामदेवऋषि, गायत्रीच्छन्द, इन्द्रादेवता।

यस्येदमा रजोयुजस्तुजे जने वनं स्वः

इन्द्रस्य रन्त्यं बृहत् ॥ ३ ॥

'रजोयुज' ज्योतिर्भिर्युक्तस्य (ज्योतीरज उच्यत इति यास्क) अत्यन्ततेजस्विनो 'यस्य इन्द्रस्य 'इद' पुरोवर्ति स्तात युक्त अविरस्ति तदपि 'स्व' स्वर्गं सर्वत्र वा 'तुजे' दातरि जने यजमानविषये 'वन यतो वननीय सम्भजनीय खलु।

---

(२) "अभिक्षमा" "अभिक्षमि" इति, "विश्वरूपं" 'विपुरूपम्" इति, "उपस्तुतम्" "उपस्तुत" इति च साम्न ऋच पाठभेद ।

(ग) निघण्टौ पृथिवीनामसु क्षमा इति पठ्यम् पद्म ।

अतः 'इन्द्रस्य' दानं 'रत्नम्' अत्यन्तरमणीयं 'बृहत्' प्रभूतं भवति ॥ ३ ॥

अथ चतुर्थी।

शुनःशेपऋषिः, चतुष्पाज्जगतीच्छन्दः, वरुणो देवता।

१२ ३१२ ३१ २३१र २र३१र ३र २ १ २

उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाय।

१२ ३ २३२१र ३र२२२ १ २

अथादित्यव्रतेवयन्तवानागसोअदितयेस्याम ॥४॥

आद्ये ऋचौ चतुष्पादे श्लोकपादयुतान्तिमा।
शौन.शेपी गार्त्समदो वामदेवीति ताः क्रमात्।
वारुणी पावमानी च वैश्वदेवीति संस्मृताः।

हे 'वरुण'! (घ) 'उत्तमम्' उत्कृष्टं शिरसि बद्धं 'पाशम्' 'उच्छ्रथाय' उत्कृष्टं शिथिलं कुरु। 'अधमं' निकृष्टं पादेऽवस्थितं पाशं 'अवश्रथाय' अव अधस्तात् शिथिलीकुरु। 'मध्यमं' नाभिदेशगतं पाशं 'विश्रथाय' वियुज्य शिथिलीकुरु। 'अथ' अनन्तरं हे 'आदित्य' अदितेः पुत्र! (ङ) वरुण!

---

(४) "अथादित्यव्रतेवयन्तव"-"अथावयमादित्यव्रतेतव"—इति शाकल ऋचः पाठभेदः।

(घ) "इषाय आदित्ये अशनि मतो दानानो मित्रावरुणा विश्रा-वि। अहःसंबन्धाः पुरुषो अर्यमा अहःहोता विश्वक्षेषु अन्वश ऋक् १०म० ६, ४, ६"-इति मन्त्रलिङ्गात्—"अहोरात्रे मित्रावरुणौ ऐता० ११अ० २२ख०"-ऐतरेय-भाष्याच्च मित्ररूपेण दिवा, वरुणरूपेण च रात्रिः व्यापकः। "वरुणः वृणोतीति सतः ऐता० १०अ० २ख०"-इति श्रुतिवाक्यात् पापेभ्यो नरपशादीनां तमोरूपेण आवरकत्व।

(ङ) "अदितिरदीना"-"अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता

अथ षष्ठी ।

वामदेव ऋषिः, एकपाज्जगतीच्छन्दः, विश्वेदेवा देवता ।

१ ।२ २२ २ २ ७२ ७

इमंवृषणंकृणुतैकमिन्माम् ॥ ६ ॥

पूर्वस्या ऋचि प्रकृता हे मित्रादयो देवाः । यूयम् 'एकम्' अद्वितीयं दानकर्मणि 'इम' सोमं 'वृषणं' कामानामभिवर्षक 'कृणुत' कुरुत । तथा 'इमा' क्रिया फलाभिवर्षिका कुरुत ॥६॥

अथ सप्तमी ।

अमहीयु ऋषिः, गायत्रीच्छन्दः, पवमानो देवता ।

१ २२ २१ २ २।२ २।

सनइन्द्राययज्यवेवरुणायमरुद्भ्यः ।

२ ।२ ३२

वरिवोवित्परिस्रव ॥ ७ ॥

गायत्र्यौ पावमान्यौ तु सनइत्यादिके ऋचौ ।
अमहीयुस्तयोरेव छन्दोदैवत निर्णयः ॥ १ ॥

हे सोम । (ञ) 'सः' 'वरिवोवित्' धनस्य लम्भकस्त्वं 'नः' अस्माकं 'यज्यवे' यष्टव्यायेन्द्राय (झ) 'वरुणाय' (ञ)

---

(ञ) "अथैषा परा भवति चन्द्रमसो वैतस्य वा"-२का॰ ११ख॰ ४ख॰ ।

(झ) 'इरा इदातीति वेरा दधातीति वा'-इत्यादि नैरुक्तम् २का॰ १०ख॰ ८ख॰ । इन्द्रशब्देन अत्र प्रसिद्धम्, अनयोनित्यस्थानत्वि-स्याग्नेरितीन्द्रपदेनाग्निरपि गृह्यते ।

(ञ) 'वरुण कवन्धं प्र-सषर्ज'-इत्यादि-मन्त्रलिङ्गात् वरुणो मेघ-वर्षण हेतुभूतः, स च आकाशचारिसमूह प्रसिद्ध ।

'मरुद्भ' (ठ) च 'परिस्रव' धारया चर ॥ ७ ॥

अथाष्टमी ।

अमहीयुऋषि, गायत्रीच्छन्द, पवमानोदेवता ।

२ ३र ३र २३उ २ ३ १ ३ २

एनाविश्वान्यर्यआद्युम्नानिमानुषाणाम् ।

३ २

सिषासन्तोवनामहे ॥ ८ ॥

'एना' एनेनानेन सोमेन 'मानुषाणां' मनुष्याणां 'विश्वानि' 'द्युम्नानि' धनानि 'अर्य:' अभिगच्छन्तः 'सिषासन्त' सम्भोक्तुमिच्छन्तश्च वय 'वनामहे' भजामहे ॥८॥

अथ नवमी ।

त्रिष्टुभो अन्नदेवता आत्मानमेवाह—आत्मा एव ऋषि ।

२ ३ २ ३२ ३ २ २

अहमस्मिप्रथमजाऋतस्य-

३ २ ३ १ २ ३ १ २ २ ३ २

पूर्वंदेवेभ्योअमृतस्यनाम ।

२ ३ २ २३उ ३ १ २ २

योमाददातिसइदेवमावद-

२उ ३ २ ३ २ ३ २

हमन्नमन्नमदन्तमद्मि ॥ ९ ॥

'देवेभ्य:' पूर्वं अग्नि वरुणादि देवेभ्य पुरा 'अहम्' अन्न

---

(ठ) 'मरुतो मितराविणो वा, मितरोचिनो वा, महद् द्रवन्तीति वा' इति नैरुक्त ११अ० १३ख० । 'वायुर्वै मरुतां देवता'-इति च श्रूयते । ततो मरुतो वायव इति सिद्धान्त ।

देवता 'अमृतस्य' विनाश-रहितस्य 'ऋतस्य' सत्यस्य परब्रह्मणः सम्बन्धिनी 'प्रथमजा अस्मि नाम' प्रथमत एवोत्पन्ना भवामि खलु। 'यः' पुमान् 'मां ददाति' अन्नरूपां माम् अतिथ्यादिभ्यो ददाति 'स इत्' स एव 'एव' परिदृश्यमान-प्रकारेण 'आवत्' अवति सर्वान् प्राणिनो रक्षति। यस्तु लोभ युक्तः सन् प्राणिभ्योऽन्नमदत्वा स्वयमेव तदन्नमत्ति। 'अन्नम् अदन्त' नानाविधान्नभक्षकं तं लोभिनम् 'अहमन्नम्' अन्न देवता 'अद्मि' भक्षयामि विनाशयामीत्यर्थः ॥ ८ ॥

## इति प्रथमः खण्डः।

—:•◯•:—

## अथ—द्वितीयखण्डे—

सैषा प्रथमा।

श्रुतकक्ष ऋषिः, इन्द्रोदेवता, गायत्रीच्छन्दः।

२ ३ १ २ ३ २ १ २

त्वमेतदधारयःकृष्णासुरोहिणीषु च।

१ २ ३ १ २ ३ १ २

परुष्णीषु* रुशत्पयः ॥ १० ॥

अस्य सामर्थ्यमेवोपपादयति। हे इन्द्र! 'कृष्णासु' कृष्णवर्णासु गोषु। 'तथा रोहिणीषु च' [ "वर्णादनुदात्तात्तोपधात्तोन इति ङीप् ) रोहितवर्णासु [ 'परुष्णीषु' परुषो पर्ववतीति यास्कः ] पर्वशः पर्वशो नानावर्णासु च गोषु 'रुशत्' [ रोचतेर्दीप्ति-कर्मणः ] दीप्यमानं श्वेतम् 'एतत्' परिदृश्य-

---

* "पुरुष्णीषु" इति ऋग्वेदीयः पाठः।

मानं 'पयः' क्षीरं त्वम् 'अधारयः' धारयसि। तस्मात् तव पूजयाम इति समन्वयः ॥ १० ॥

अथ द्वितीया।

पवित्रऋषिः, जगतीच्छन्दः, पवमानो देवता।
अरूरुचदिति ख्यातां पवित्रो दृष्टवानृषिः।
पवमानो देवता स्याच्छन्दश्च जगती स्मृता ॥

१ २    ३ २,३ १ २   ३ २ ३ १ ३   ३ १
अरूरुचदुषसःपृश्निरग्रियउक्षामिमेति भुु-

३    ३ १   २    १ २
वनेषुवाजयुः। मायाविनोममिरेअस्य-

२ ३ १ २ ३ १ २    ३ १ २ ३ २ ३ १ २
मायया नृचक्षसःपितरोगर्भमादधुः ॥ ११ ॥

[ 'उषसः' सम्बन्धी 'पृश्निः' आदित्यः(ठ) [ पृश्निरादित्यो भवति, प्राश्नुत एनं वर्ण इति नैरुक्ताः ]। 'अग्रियः' अग्र्यः मुख्यः सोमः 'अरूरुचत्' रोचयति। स 'उक्षा' जलस्य सेक्ता पर्जन्यः सन् 'मिमेति' भृशं शब्दायते। 'भुवनेषु' भूतजातेषु 'वाजयुः' तेषामन्नमिच्छन्; 'मायाविनः' माया प्रज्ञा तद्वन्तो देवाः 'अस्य' सोमस्य 'मायया' प्रज्ञया 'ममिरे' निर्मितवन्तः [ सोमस्य एकीकार्य-पानप्रभावात् अग्न्यादयः स्व-स्व-व्यापारेण जगत् सृजन्तीत्यर्थः ]। तस्य 'अस्य' मायया 'नृचक्षसः' नृणां

---

(११) "मिमेति भुवनेषु"—"बिभर्ति भुवनानि—" इति सामऋचः पाठभेदः

(ठ) 'बहवादित्याणुपादादिवच' इति च नैरुक्तम् २अ॰ ११प॰ १० ख॰ ।

द्रष्टारः 'पितरः' पालकाः देवाः अङ्गिरसः पितरो वा 'गर्भम्' 'आदधुः' धारयन्ति ओषधीषु ।

स चात्र सूर्यात्मा सोमः स्तूयते । सूर्य-रश्म्यनुगमाधीन-वर्धनाच्च चन्द्रस्य ॥

यद्वा अयमुषसः शुक्रिः सविता अरूरुचत् दीपयति दीप्यते वा । सर्वं शिष्टं समानम् । तत्सम्बन्धिनो नृणां द्रष्टारः पितरो जगद्रक्षकाः रश्मयो गर्भमादधुरित्यर्थः ॥११॥

अथ तृतीया ।

इयोर्मधुच्छन्दो वैश्वामित्रो द्रष्टा गायत्रीच्छन्द इन्द्रो देवतेति।

२ २ २ उ १ २ २ १ २ ३ १ १ २ ३ १ २

इन्द्रइद्धर्योःसचासम्मिश्लआवचोयुजा ।

१ २ २ १ २ २ १ २

इन्द्रोवज्रीहिरण्ययः ॥ १२ ॥

'इन्द्रइत्' इन्द्र एव 'हर्योः' हरि-नामकयोरश्वयोः 'सचा' सह युगपत् 'आ सम्मिश्लः' सर्वतः सम्यङ्मिश्रयिता । कीदृशयोर्हर्योः ? 'वचोयुजा' इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः । अयम् 'इन्द्रः' 'वज्री' वज्र-युक्तः 'हिरण्ययः' हिरण्मयसर्वाभरणैरुपेत इत्यर्थः ॥ १२ ॥

अथ चतुर्थी ।

मधुच्छन्दाःविश्वामित्रऋषिः, गायत्रीच्छन्दः, इन्द्रो देवता ।

३ १ २ ३ १ २

इन्द्रवाजेषुनोऽवसहस्रप्रधनेषुच ।

२ १ २ ३ १ २ १ २

उग्रउग्राभिरूतिभिः ॥ १३ ॥

हे इन्द्र ! 'उग्रः' शत्रुभिरप्रधृष्यस्त्वम् 'उग्राभिः' अप्रधृ-

अथ षष्ठी ।

नियुत्वानिति गायत्री वायुः ऋषिरग्निर्देवोऽब्रवीत् ।

१ २ ३ २ २ ३ १ २ ३ १ २

नियुत्वान्वायवागह्ययꣳशुक्रो अयामि ते ।

१ २ ३ २ ३ २

गन्तासि*सुन्वतो गृहम् ॥ १५ ॥

हे 'वायो !' (त) 'नियुत्वान्' नियुतो वाहनानि वायोः (नियुतो वायोरिति निघण्टुः) तैर्युक्तस्त्वं 'आगहि' आगच्छ । 'अयं' 'शुक्रः' दीप्यमानः सोमः 'ते' तुभ्यम् 'अयामि' (याम कर्मणि लुङि रूपम्) नियतो गृहीत आसीत् । त्वं 'सुन्वतः' सोमाभिषवं कुर्वतो यजमानस्य 'गृहं' 'गन्तासि' यातोऽसि ॥ १५ ॥

अथ सप्तमी ।

नृमेधपुरुमेधौ ऋषी ऐन्द्री ककुभ् ।

३ १ २ ३ २ ३ १ २ ३ १ २

यज्ञायथा अपूर्व्य मघवन्वृत्रहत्याय ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २

तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ॥ १६ ॥

हे 'अपूर्व्य !' त्वत्तो व्यतिरिक्तेन पूर्वेण वर्जित । हे 'मघ

---

* "गतासि" इति ऋग्वेदपाठः ।

(त) 'वायुर्नियुत्वान् ... ' इत्यादि निरुक्तम् १०। ११, २ ख० ।

वन्।' महत्तीयतम। धनर्वविन्द्र। 'हवहव्याय' (घ) हवासुर-हननाय 'यद्' यदा त्वं 'जायथा' उत्पन्न प्रादुर्भूतोऽसि 'तत्' तदानीमेव 'पृथिवीं' प्रथमानाम् 'अप्रथय' प्रसिद्धां दृढा-मकरो। 'उत' अपिच 'दिव' द्यां द्युलोक मन्तरिक्षेण 'अस्तभ्ना' निरुद्धामकार्षीः (इदम वीर्यं त्वदन्यस्य न भवती-त्यर्थं द्योतयितुम् अपूर्व्येति पदम्)॥ १६॥

## इति द्वितीयः खण्डः।

---

## अथ तृतीयखण्डे—

सैषा प्रथमा।

वामदेवऋषि प्रोक्तो मयीत्यस्याः प्रजापतिः।

देवतायास्तथानुष्टुप् छन्दोऽनुष्टुप् सत्य इतीरितम्॥

२ ३१ २३ २ १२३१ ० २ ३१२ ३२
मयिवर्चोअथोयशोअथोयज्ञस्ययत्पयः।

२ ३ १ ३ २ २ ३१२ ३१ ३२
परमेष्ठीप्रजापतिर्दिविद्यामिवदृंहतु॥१७॥

'परमेष्ठी' परमे लोके तिष्ठतीति परमेष्ठी प्रजापति (ङ) 'दिवि' द्योतमाने स्वर्गे 'द्यामिव' द्योतमाना कान्तिमिव।

---

(घ) 'अस्याः कर्म—वृत्रासुरहनन महत्त्वयो या च का च बल-कृतिरिन्द्र कर्मैव तत्' इति नैरुक्तम् ७का० ३पा० १०ख०। 'हवनको मेयवध'-इति सत्यव्रतभाष्यम्।

(ङ) 'प्रजापति प्रजायाः पाता पालयिता वा'-इत्यादि नैरुक्तम् १०का० १० अ० ३१, ३३ ख०।

'मयि' मत्सदीये शरीरे 'वर्चः' तेजः ब्रह्मवर्चं 'दृंहतु' वर्द्धयतु। 'पयो' अपिच 'प्रजां' 'दृंहतु'। 'मयी' त्विच। 'यज्ञस्य' यागस्य सम्बन्धि अतएव स उत्तमं 'पयः' हविर्लक्षणमन्न च दृंहतु। १७॥

अथ द्वितीया।

त्रिष्टुभः पावमान्याः स्वार्द्धयगौतमसामकः।

१ १२ ३ १ २ २ २ २ ३१२३१

सन्तेपयाएंसिसमुयन्तुवाजाः सँवृष्ण्यान्यभि

३ १ २ ३ १ २ ३ १ २

मातिषाहः। आप्यायमानोअमृतायसोम

१ २१ २ १ २ २ १ २

दिविश्रवाएंस्युत्तमानिधिष्व॥ १८॥

हे 'सोम!' 'अभिमातिषाहः' अभिमातीनां शत्रूणां हन्तः 'ते' तव एवंभूतं त्वां 'पयांसि' अपयार्यांसि वीर्याणि 'संयन्तु' सङ्गच्छन्ताम्। तथा 'वाजाः' हविर्लक्षणान्यन्नानि च त्वां सङ्गच्छन्ता 'वृष्ण्यानि' वीर्याणि च सङ्गच्छन्ताम्। हे सोम! त्वं 'अमृताय' आत्मनः अमृतत्वाय अमरत्वाय 'आ' समन्तात् वर्द्धमानः सन् 'दिवि' नभसि स्वर्गे 'उत्तमानि' उद्गततमानि उत्कृष्टानि 'श्रवांसि' अन्नानि अस्माभिः भोक्तव्यानि हविर्लक्षणानि 'धिष्व' धारय (ते क्रिया-ग्रहणं कर्त्तव्यमिति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी। १८॥

अथ तृतीया।

(ऋष्यादिकम् पूर्ववत्)

१ १२१ २२ २ २ २ २ २१ २

त्वमिमाओषधीःसोमविश्वास्त्वमपोअज-

१ २ १ २ १२ १ २१
नयस्त्वंगाः। त्वमातनो*रुर्वान्तरिक्षं
३र २र२ ३र २१
त्वंज्योतिषावितमोववर्थ ॥ १९ ॥

हे 'सोम'! 'त्वम्' 'इमा' भूम्यां वर्त्तमाना 'विश्वा' सर्वा 'ओषधी' 'अजनयः' उत्पादितवानसि। तथा 'त्वम्' 'अपः' तासामोषधीनां कारणभूतानि वृष्ट्युदकानि अजनयः। तथा 'त्वं' 'गाः' सर्वान् पशून् उदपादयः। 'उरु' विस्तीर्णम् 'अन्तरिक्षं' 'त्वम्' 'आतनोः' विस्तारितवानसि। तस्मिन्नन्तरिक्षे यत् 'तमः' अस्मद्दृष्टिनिरोधकम् अन्धकारं यदपि 'त्वं' 'ज्योतिषा' आत्मीयेन प्रकाशेन 'वि ववर्थ' विशिष्टं छात वानसि। (ववर्थ वृञ वरणे लिटरूपं, "बभूथा ततन्थ जगृभ्म ववर्थेति" निपात्यते) ॥ १९ ॥

अथ चतुर्थी।

अग्निमीडे मधुच्छन्दा गायत्र्याग्निस्तुति।

१ १ २ ३१ २ ३१ ३२२ २ ३२
अग्निमीडे*पुरोहितंयज्ञस्यदेवमृत्विजम्।
१ २ ३१ २
होतारं रत्नधातमम् ॥ २० ॥

'अग्नि' नामकं 'देवम्' 'ईडे' स्तौमि (ईडस्तुताविति धातु, मन्त्रस्यास्य होत्रा प्रयुज्यमानत्वात् अहं होता स्तौमीति लभ्यते) कीदृशम् अग्निम्? 'यज्ञस्य पुरोहितं' यथा राज्ञ

---

* "आतनो" "आतन्व"—इति साम्न ऋच पाठौ।
* "मीळे" इति ऋग्वेदपाठ।

पुरोहितः तदभीष्टं सम्पादयति तथाग्निरपि यज्ञस्यापेक्षितं होमं सम्पादयति। यद्वा यज्ञस्य सम्बन्धि पूर्वभागे आहवनीयरूपेणावस्थितम्। पुनः कीदृशम्? 'होतारमृत्विजम्' (देवानां यज्ञेषु होतृनामकमृत्विजमग्निमेव। तथाच श्रूयते— "अग्निर्वै देवानां होतेति")। पुनरपि कीदृशम्? 'रत्नधातमम्' यागफलानां रत्नानाम् अतिशयेन धारयितारं पोषयितारम्॥

अग्निशब्दस्य यास्को बहुधा निर्वचनं दर्शयति—"अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवति, अग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति सन्नममानोऽक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिरितादक्ताद्दग्धाद्वा नीतात् स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परस्तस्यैषा भवति (७,४,१")" इति। २०॥

अथ पञ्चमी।

त्रिष्टुभा वामदेवोऽस्तौदग्निं तेमन्वतेति च।

१२ ३१र २ ३ १ २ ३ १
तेमन्वतप्रथमन्नामगोनांत्रिःसप्त

३१ २र ३ २ १ २ ३ २ ३र
रमन्नामजानन्। ताजानतीरभ्यनूष

३२ ३ १ २ ३ २र ३र ३ १ २
तक्षाआविर्भुवन्नरुणीर्यशसागावः* ॥२१॥

---

*"ताजानतीरभ्यनूषतक्षा आविर्भुवन्नरुणीर्यशसागावः"— इति छन्दोगाः। "ते मन्वत प्रथमं नाम गोनां त्रिःसप्त परमं

हे 'अग्ने !' ते स्तोत्रं कुर्वाणा अङ्गिरसः 'गोनां' गवां वाचो मध्यन्दिनं नाम स्तुतिसाधकं शब्दजातं 'प्रथमं' पूर्व्वम्, 'अमन्वत' अजानत। अथ तस्या वाचः सम्बन्धीनि 'त्रि सप्त' एकविंशतिसङ्ख्याकानि 'परमं' परमाण्युत्कृष्टानि 'नाम' नामानि स्तुतिसाधकानि स्तोत्राणि (जातावेकवचनम्)। छन्दांसि च, तानि च गायत्र्यादीनि जगत्यन्तानि सप्त, अति-जगत्यादीनि अतिधृत्यन्तानि सप्त, कृतिप्रभृतीन्युत्कृति पर्य्यन्तानि सप्त) 'जानन्' अजानन् अन्वभवन् (एवंविधच्छन्दो-युक्तैर्मन्त्रैरग्निमस्तुवन्नित्यर्थः) 'ताः' वाच 'जानती' सर्व्वं जानत्य 'खा' ( क्षियन्ति गच्छन्त्यनयः वाच प्राप्नुयन्ति ता ) 'अभ्यनूषत' अस्तुवन्। तत सूर्य्यस्य 'यशसा' तेजसा सह 'अरुणी' अरुणवर्णा 'गावः' 'आविर्भुवन्' प्रादुरभूवन्। ( यद्वा 'ते' अङ्गिरस 'प्रथमं' पुरातनं 'नाम' अस्ति सुरभि गुग्गुलु गन्धिनीति धेनु नामधेयम् 'अमन्वत' उच्चारयामासुः। अथात् ए भूतानि प्राणिभिरपहृतानि त्रि सप्त स्तोत्राण्यविन्दन्। तत उच्चारितं जानत्य 'गावः' अभ्यनूषत' हम्भारव लक्षण शब्दमकुर्व्वत। तदानीमुषा प्रादुरभूदिति ॥२१॥

अथ षष्ठी।

ऋतीय विद्भुवाग्नेयो दृष्टा उक्तमदेव सा ॥

१ १र १र २ १ २ २ २ २ १

समन्यायन्त्युपयन्त्यन्याः समानमूर्वं

---

नाम जानन्। ता जानतीरभ्यनूषत गा आविर्भुवन् धेनोरिव पदानि विन्दन्। तज्जानतीरभ्यनूषत गा आविर्भुव अरुणी र्यशसा गो"—इति ऋ. २. ३।

४

३ २र      १   २ ३ २

नद्यस्पृणन्ति । तमूशुचिꣳशुचयोदी

१ ३   २ ३ १र  ३र २  ३ १२३ १  २

दिवाꣳसमपान्नपातमुपयन्त्यापः * ॥ २२ ॥

'अन्याः' वर्षाणाम् 'आपः' 'संयन्ति' भूम्यां सङ्गच्छन्ते 'अन्याः' च 'पूर्वं' तत्रावस्थिताः 'उपयन्ति' उपगच्छन्ति । ताः सर्वा आपः 'समानं' सह 'नद्यः' नद्यो भूत्वा 'ऊर्वं' समुद्रमध्ये वर्त्तमानं वडवानलं 'पृणन्ति' प्रीणयन्ति (पृण प्रीणने तौदादिकः) 'तमु' तमेव 'अपांनपातम्' 'शुचिं' निर्मलं 'दीदिवांसं' दीप्यमानं [दीदिवेति छान्दसो दीप्तिकर्मा लिटः क्वसुः । वस्वे काजाद्यमामिति नियमादिडभावः । छन्दसीवेति वक्तव्यमिति वचनाद्द्विवचनाभावः । एवंभूतं ] 'शुचयः' शुद्धाः 'आपः' 'उपयन्ति' समीपे गच्छन्ति ॥

एष हि वैद्युताग्निरूपेण मेघे वर्त्तमानोऽस्मान् प्रजोद्भन-दिति बुद्ध्या वडवानलरूपेण वर्त्तमानं तं पर्युपासत इत्यर्थः । यद्वा अन्या एकदेशस्था आपः संयन्ति । द्यावापृथिव्यो-र्मध्ये वसतीवरीभिः सङ्गच्छन्ते । अन्या वसतीवर्याख्या आपश्च उपयन्ति उपरि गच्छन्ति एकमत्यं प्राप्ता भवन्ति । एताश्च मिलित्वा यज्ञं साधयन्त्यः तत्साध्य-वृष्टि-द्वारा नद्यो भूत्वा ऊर्वं पृणन्तीत्यादि समानम् । एवं हि आपो वा अस्पर्द्धन्त वयं पूर्वं यज्ञं वक्ष्याम इत्यादिको बह्वृचब्राह्मणविनियोगाद्यनु-सन्धेयः ॥ २२ ॥

---

* "अपांनपातमुपयन्त्यापः"—"परितस्थुरापः" इति मान्त्र-कस्थः पाठभेदः ॥

अथ सप्तमी।

अस्यौदगुप्तमा रात्रिं वामदेव ऋचानया।

१र  २र२ १ २२ १र २र२ १र  २र
आभागाद्भद्रायुवतिरह्नःकेतूंत्समीर्त्सति।

१२१ २ २ १२ २ १ २ २१२२१ २
अभूद्भद्रानिवेशनीविश्वस्यजगतोरात्री ॥२३॥

'भद्रा' सूर्य्यप्रकाशसन्ताप निवारयन्ती सुखकरी 'युवतिः' तमसो मिश्रयित्री 'रात्रिः' 'आभागात्' आभिमुख्येन प्रगच्छति। 'अह्नः' चन्द्रमसः 'केतून्' रश्मीन् 'समीर्त्सति' सम्यग् वर्धयितुमिच्छति च। अतएव 'भद्रा'कल्याणी रात्री 'विश्वस्य' सर्वस्य 'जगतः' 'निवेशनी' निवेशकारिणी 'अभूत्' भवति। (अहनि स्वस्वव्यापारात् खिन्नान् सर्वप्राणिनः स्वापयेषु स्वापयतीत्यर्थः॥ २३ ॥

अथ अष्टमी।

वैश्वानरं जगत्यास्तौद्भरद्वाजो बार्हस्पत्यः॥

१२२ १ २ २ २२२उ १ २२ १ ०
प्रक्षस्यवृष्णोअरुषस्यनूमहः प्रनोवचो

२१२ २ १ २ २ १ २ २ १र
विदथाजातवेदसे। वैश्वानरायमतिर्न

०२२२ २ १ २ २१२२१ ०
व्यसेशुचिः सोमइवपवतेचारुरग्नये* ॥२४॥

---

* "प्रक्षस्य"—"प्रयसा"-इति, "महः"-"सहः"-इति, "प्रनोवचो"-"प्र नु वोचम्"-इति, "जातवेदसे"-"जातवेदस"-इति, "नव्यसे" "नव्यसि"-इति च सामकस्य: पाठ-भेदः॥

'प्रयस्य' संवृतस्य व्याप्तस्य (यद्वा पूतं हविर्यपमत्र तद्वतः) 'वृष्णः' सेक्तुः 'अरुषस्य' आरोचमानस्य 'वैश्वानराय'(४) 'महः' पूजायुक्तं बलं तेजो वा 'नु' क्षिप्रं स्तौमि। अतएव 'नः' अस्मदीयं 'वचः' वचनं 'विदथे' यागे 'प्रयच्छति' स्तोमीत्यर्थः। 'जातवेदसे' जातप्रज्ञाय जातधनाय वा तमुद्दिश्येत्यर्थः। (उक्तमेव प्रकारान्तरेणादरादाह) 'नव्यसे' नवतराय 'वैश्वानराय' अग्नये 'शुचिः' निर्मला स्तोतॄणां शोधयित्री वा। 'चारुः' कल्याणी 'मतिः' मननीया स्तुतिः 'पवते' मत्सकाशात् प्रभवति स्वयमेव गच्छतीत्यर्थः। 'सोम इव' यथा सोमो-स्थापवित्रात् स्रवति तद्वदित्यर्थः ॥२४॥

अथ नवमी।

एषा त्रिष्टुप् वैश्वदेवी भरद्वाजेन वीक्षिता।

१ २ ३ १र २र ३२ ३ १र २र ३ १र
विश्वे देवा मम शृण्वन्तु यज्ञो॰ उभे रोदसी अपान्न
१र ३ १ २ ३ १ २ ३ १ २
पाच्च मन्म। मा वो वचाꣳसि परिचक्ष्याणि
३ २उ ३ १२
वोचꣳ सुम्नेष्विद्वो अन्तमा मदेम ॥ २५ ॥

'विश्वे' सर्वे 'देवाः' 'मम' मदीयं 'मन्मः' मननीयं 'यज्ञ'* यजनीयं पूजां स्तौमि वा 'शृण्वन्तु' गृह्णन्त्वित्यर्थः। 'अपां नपात्' मध्यस्थानोऽग्निश्च 'उभे रोदसी' द्यावापृथिव्यौ अस्मदीयं स्तोत्रं शृण्वन्तु विश्वे अवधारयन्तु।

---

* "यज्ञ"—"यज्ञियाः"-इति पाठौ।

(४) वैश्वानरः कस्माद् विश्वान् नरान् नयति इत्यादि नैरुक्तम् ७,२१।

अथ प्रत्यक्ष-कृताः।—हे देवाः! ‘वः’ युष्माकं ‘परिच-क्षाणि’ परिवर्जनीयानि यानि ‘वचांसि’ स्तोत्राणि ‘मा वोच’ न ब्रवीमि। अपितु समीचीनान्येवेति। अतः, वो युष्माकम् ‘अन्तमाः’ अन्तिकतमाः सन्तो वयं ‘सुम्नेष्वित्’ सुखाभिदंनेषु सुखेष्वेव वर्त्तमानाः ‘मदेम’ मोदेम॥२५॥

अथ दशमी।

वामदेवो महापङ्क्त्या स्तौति लिङ्गोक्तदेवताः॥

१ २ ३ १ २ ३ ३१२ ३२ ३१
यशोमाद्यावापृथिवीयशोमेन्द्रबृहस्पती।

२ ३ २ ३१ २ ३१ २
यशोभगस्यविन्दतुयशोमाप्रतिमुच्यताम्।

२ २ २ ३ २ ३ १ ३ ३१ २
यशस्व्या३:स्याःसंसदोऽहंप्रवदितास्याम्॥२६॥

‘द्यावापृथिवी’ द्यावापृथिव्योः ‘यशः’ ‘मा’ स्तोतारम् ‘आविन्दतु’ आगत्य प्राप्नोत्वित्यर्थः। किञ्च, ‘इन्द्रबृहस्पती’ इन्द्राबृहस्पत्योः ‘यशो’ ‘मा’ मां विन्दतु। किञ्च, ‘भगस्य’ आदित्यस्य ‘यशः’, मा’ मां विन्दतु। बहुलेन यशसा यशो मया ‘मा प्रतिमुच्यतां’ न प्रमुच्यताम्। ‘यशस्व्याः’ अस्याः मम ‘संसदः’ सभायाः ‘यशः’ न प्रमुच्यताम्। ‘अहं’ प्रवदिता सर्वत्र वक्ता ‘स्याम्’ भूयासम्॥२६॥

अथ एकादशी॥

दृष्टा हिरण्यस्तूपेन त्रिष्टुबैन्द्रदेवता॥

१२ ३ १०४२२ ३१ २२ १ २३ १ २
इन्द्रस्यनुवीर्य्याणिप्रवोचंयानिचकार

२१ २ २ २ १ ३ २ २ ३ २
प्रथमानि वज्री। अहन्नहिमन्वपस्त

२ ३ २ ३ २ २ ३ २
तर्दप्रवक्षणा अभिनत्पर्वतानाम् ॥२७॥

'वज्री' वज्रयुक्त इन्द्रः 'प्रथमानि' पूर्वसिद्धानि मुख्यानि वा 'यानि' 'वीर्याणि' पराक्रमयुक्तानि 'कर्माणि' चकार। तस्य 'इन्द्रस्य' तानि वीर्याणि। 'नु' क्षिप्रं 'प्रवोचं' प्रब्रवीमि। कानि वीर्याणीति? तदुच्यते—'अहि' मेघम् 'अहन्' हतवान्। तदेतदेकं वीर्यम्। 'अनु' पश्चात् 'अपो' जलानि 'ततर्द' हिंसितवान् भूमौ पातितवानित्यर्थः। इदं द्वितीयं वीर्यम्। 'पर्वतानां' सम्बन्धिनीः 'वक्षणाः' प्रवहणशीला नदीः 'प्राभिनत्' कूलद्वयकर्षणेन प्रवाहितवानित्यर्थः। इदं तृतीयं वीर्यम् ॥ २७॥

अथ द्वादशी।

विश्वामित्रऋषिस्त्रिष्टुप्छन्दस्त्वग्निरिति दयोः।
उत्तरार्धे स्तुतिः पूर्वा स्तुतिः सर्वात्मनात्मनः॥

१ १ २ १ २ १ २ ३ १ २ २ ३२
अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षु

३ १ २ ३ २ ३ १ २ ३ १२ ३ २
रमृतं म आसन्। त्रिधातुरर्को रजसो

३ २ ३ २ २ ३ २ ३ १ २ ३ २
विमानोऽजस्रं* ज्योतिर्हविरस्मि सर्वम् ॥२८॥

---

* "अजस्र"-"घर्मः"-इति साम ऋच. पाठभेदः।

साक्षात्कृत परतत्त्व स्वरूपोऽस्मि साक्षात् सर्वात्मा सर्वात्मकत्वानुभवम् प्रसङ्गाच्चि आविष्करोति—

हे कुशिका। भोक्तृ भोग्य भावेन द्विविधम् इद सर्वं जगत्। "एतावद्वा इदमन्न चैवान्नादश्च सोम एवान्नमग्निरन्नाद," इति श्रुते। तत्र सकल भोक्तृ-वर्गं रूपेणान्नादोऽग्नि। स च अग्निवाय्वादित्य भेदेन त्रेधा भूत्वा पृथिव्यन्तरिक्ष-द्युलोकानधितिष्ठति। तदुक्त वाजसनेयके—"स त्रेधात्मान व्यकुरुतादित्य द्वितीय वायु तृतीयम्" इति।

तत्र सो 'ऽग्नि' अह 'जन्मना' एव 'जातवेदा' 'अस्मि' श्रवणमननादि साधन निरपेक्षेण स्वभावत एव साक्षात्कृत पर तत्त्वस्वरूपोऽस्मि। 'घृत मे चक्षु' यदेतदिदन्त्वावभासक मम स्वभावभूतप्रकाशात्मकं चक्षु तद् घृतन् इदानी मदन्न दीप्तम्। यदेतद् प्रवृत्त कर्मफल दिव्यादि विविध-विषयोपभोगात्मक तन्मे मम आसन्नास्ये वर्त्तते। सकल-भोक्तृ वर्गात्मना स्वयमेवावस्थानात्। (एव स्वात्मन पृथिव्यधिष्ठातृ रूपता मभिधाय वाय्वात्मनान्तरिक्षाधिष्ठातृतामाह) "अर्कों जगत, सदा प्राण। "सोऽर्चन्" चरत्तस्यार्चत आपो जायन्तार्चते वै कमभूदिति तदेवार्कस्यार्कत्वमिति" श्रुते। स प्राण अह त्रिधातु त्रिधात्मान विभज्य तत्र वाय्वात्मना 'रजस,' अन्तरिक्षस्य 'विमान' विमाता अधिष्ठातास्मि। (तथा आदित्यरूपेण द्युलोकाधिष्ठातृतामाह—) 'अजस्र ज्योति' अनुपक्षीण नित्य तेज प्रकाशात्मा द्युलोकाधिष्ठाता आदित्योऽप्यह अस्मि। (एव भोक्तृ रूपता मात्मनोऽनुसन्धाय भोग्य रूपता मप्यनुसन्धत्ते। यत् हविर्भोग्य प्रसिद्ध अस्ति तदपि अप्यह मवास्मि॥

यद्वा। अह 'अग्नि' अस्मि देवाना हवि प्रापणात् अह

नादिगुण-युक्तोऽस्मि। किञ्च, 'अग्निना' इत्यस्य 'जातवेदाः' जातप्रज्ञानोऽस्मि। उत्पत्ति-ज्ञान एव सर्वप्रोऽहं अस्मि। यद्वा जातं सर्वं स्वात्मतया वेत्तीति जातवेदाः सर्वात्मक इत्यर्थः। तत् कथम्? इत्युच्यते—'घृतं' मे चक्षुः यदेतद् घृतं प्रसिद्ध-मस्ति तच्च चक्षुः-स्थानीयम्, यथालोके चक्षुर्भासकम् एवं घृत-मपि प्रक्षिप्तं ज्वालामुत्पादयत मम भासकम्। 'अमृतं' प्रभारूपं। यदमृत मविनाशि ज्योतिः 'मे' मम 'आसन्' आस्ये वर्त्तते। 'त्रिधातुः' प्राणापानव्यानात्मकत्रिधा वर्त्त-मानोऽर्कोऽर्चनीयो यः प्राणोऽस्ति सोऽप्यहमेवास्मि। तथा 'रजसः' अन्तरिक्षस्य 'विमानः' विशेषेण माता परिच्छेत्ता वायुश्चाहमस्मि। किञ्च। 'अजस्रं ज्योतिः' नैरन्तर्य्येण तापकः सूर्य्यश्चाहमस्मि। किं बहुना। आज्य-पुरोडाशादि-रूपं यदे-तदपि हविः तदुपलक्षितं सर्वं मदात्मकमस्ति ('सर्वं खल्विदं ब्रह्मेति श्रुतेः) तमनेकधा सर्व्वं: सर्वात्मकत्व-प्रतिपादनेन पर-ब्रह्मत्वं सूक्तं भवति। २८॥

अथ त्रयोदशी।

१ २ ३ १ २ ३र ३र ३ २र ३र ३ २र
पात्यग्निर्विपो अग्रं* पदं वेःपातियह्व

३र ३ १ २ ३ २ ३ १ २
श्चरणं सूर्य्यस्य। पातिनाभासप्तशीर्षा-

३ २र ३र ३ १ २ ३ १ ३ ३ २
णमग्निःपातिदेवानामुपमादमृष्वः॥ २९॥

'अग्निः' 'वै' अन्नाः सर्वत्र व्याप्तायाः 'विपः' भूम्याः

---

* "पात्यग्निर्विपोअग्रम्"-"पाति प्रियं रिपोअग्रम्"-इति पाठौ।

'अर्घं' मुख्य 'पदं' स्थानं 'पाति' रक्षति। 'यह्वः' महान् अग्निः 'सूर्य्यस्य' 'चरणं' चरत्यनेनेति चरणमन्तरिक्षं 'पाति'। 'नाभा' नाभौ अन्तरिक्षस्य मध्ये 'सप्त शीर्षाणं' सप्तगणं मरुद्गणं 'पाति'। 'ऋष्वः' दर्शनीयोऽयम् 'अग्निः' 'देवानाम्', 'उपमादम्' उपमादकं यज्ञं 'पाति' रक्षति ॥ २९ ॥

## इति तृतीयः खण्डः।

---

## अथ—चतुर्थखण्डे—

सैषा प्रथमा।

वामदेवऋषिः पंक्तिर्भ्राजन्त्यग्ने इति द्वयोः।
आग्नेयौ प्रथमसंख्या द्वितीया दृश्यते तयोः॥

१ २ २ १ २ २
भ्राजंत्यग्नेसमिध्यानदीदिवोजिह्वाचरत्यं
१२ १ २ १२ २२ २ १ २ १२ २ १२
तरासनि। सत्वंनोअग्नेपयसावसुविद्रयिं
२२ २ १ २
वर्चोदृशेदाः ॥ ३० ॥

'समिधान' ऋत्विग्भिः समिध्यमान। दीप्त। हे 'अग्ने'! 'भ्राजन्ती' प्रकाशमाना 'आसनि' आस्ये 'अन्तर्' मध्ये स्थिता त्वदीया 'जिह्वा' हवींषि 'चरति' भक्षयति। हे 'अग्ने'! 'वसुवित्'! धनलम्भक! त्वं 'नः' अस्मभ्यं 'पयसा' अन्नेन सह 'रयिं' रमणीयं धनं 'दृशे' दर्शनाय 'वर्चः' तेजश्च तेजस्वित्वं वा 'अदाः' देहि ॥ ३० ॥

15/71

अथ द्वितीया।

१ २र ३र १ २र ३र १ २र ३र

वसंतइन्नुरंत्योग्रीष्मइन्नुरंत्यः। वर्षाण्यनु

१ २ १ २र ३र१ २र ३र

शरदोहेमंतःशिशिरइन्नुरंत्यः॥ २१॥

'वसन्त इत्' वसन्त एव चैत्र-वैशाखरूपवसन्त ऋतुरेव 'रन्त्यः' रमणीयः भवति। 'ग्रीष्म इत्' ज्येष्ठाषाढरूपो ग्रीष्म-ऋतुरेव 'रन्त्यः' रमणीयः। 'वर्षाणि' वर्षाख्याश्च श्रावणभाद्रपद-रूपेणावयवीभूतः प्रावृट् ऋतुरेव 'रन्त्यः' रमणीयः। 'तथानु' 'शरदः' आश्विनकार्त्तिकरूपेणावयवीभूतऋतुः 'रन्त्यः' रमणीयः। 'हेमन्तः' मार्गशीर्ष-पौषरूप एव 'रन्त्यः' रमणीयः। 'शिशिर इत्' माघ-फाल्गुनरूप एव 'रन्त्यः' रमणीयः॥२१

अथ तृतीया।

१ २ ३ १ ३ १ २ ३ २र३

सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात्।

२र ३र ३ १ २ ३ १ ३ ३ १

सभूमिंसर्वतो (१) वृत्वात्यतिष्ठद्दशांगुलम्॥२२॥

सर्व-प्राणि-समष्टि-रूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः सोऽयं 'सहस्रशीर्षाः' (सहस्र शब्दस्योपलक्षणत्वात्) अनन्तैः शिरोभिर्युक्त इत्यर्थः। यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्रशीर्षत्वम्। एवं सहस्राक्षत्वं सहस्रपादत्वं च। स पुरुषः 'भूमिं' ब्रह्माण्ड-गोलक-रूपां सर्वतः 'वा' समन्तात् 'वृत्वा' परिवेष्ट्य दशाङ्गुल परिमितं देशम् 'अत्यतिष्ठत्' अतिक्रम्य व्यवस्थितः।

(१) "[illegible]"-इति क०।

(इत्याद्युक्तलक्षणः) महाण्डाद्वहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः ॥ २२ ॥

अथ चतुर्थी।

२ २ २ २उ २ १ २ ३ १ २ २ १ २ २ १ २

त्रिपादूर्द्ध्व उदैत्पुरुषःपादोऽस्येहाभवत्पुनः।

१ क २र २ २ २ २

तथाविष्वङ्व्यक्रामदशनानशनेअभि(२) ॥२३॥

योऽयं 'त्रिपात् पुरुष.' संसार स्पर्श-रहितः ब्रह्मस्वरूपः सोऽयम् 'ऊर्ध्वं उदैत्' अस्मादज्ञानकार्य्यात्संसाराद्बहिर्भूत. सन् तत्रत्यैर्गुणदोषैरस्पृष्टः उत्कर्षेण स्थितवान्। 'अस्य' योऽयं 'पादः' लेशः सोऽयमिह मायायां पुनरभवत्। सृष्टि-संहाराभ्यां पुनः पुनरागच्छदिति (अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तं—"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति") तथा मायायामागत्यानन्तरं 'विष्वङ्' देव तिर्य्यगादि-रूपेण विविधः सन् 'व्यक्रामत्' व्याप्तवान्। किं कृत्वा? 'अशनानशने' अभिलक्ष्य अशनं भोजनादि व्यवहारोपेतं चेतनं प्राणि-जातम्, अनशनं तद्रहितमचेतनं गिरिनद्यादिकम्। तदुभयथा यथा स्यात्तथा अयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥ २३ ॥

अथ पञ्चमी।

१ २ २ २उ १ २ ३ २उ २ १ २

पुरुष(३)एवेदꣳसर्वँ यद्भूतंयच्चभाव्यम्(४)।

(२) "ततो विष्वङ् व्यक्रामत् साशनानशने अभि" ऋ०

(३) "पुरुषवेद"—(४) "यच्च भव्यम्"—

१ २ ३ १ २ ३ १ १ २ १ २ ३ १ १ २ १

पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि(५) ॥३४॥

यत् 'इदं' वर्त्तमानं जगत् तत् 'सर्वं' 'पुरुष एव'। 'यद्भूतम्' उत्पन्नं जगत् 'यच्च भाव्यं' भविष्यज्जगत् तदपि पुरुष एव। यथास्मिन् काले वर्त्तमानाः प्राणिनः सर्वेऽपि चराचरात्मकपुरुषस्यावयवा तथैव गतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः। एतदेवोभयं स्पष्टीक्रियते—'अस्य' पुरुषस्य 'सर्वाणि भूतानि' कालत्रयवर्त्तीनि प्राणि-जातानि 'पादः' चतुर्थोऽंशः। 'अस्य' पुरुषस्यावशिष्टं 'त्रिपात्' स्वरूपम् 'अमृतं' 'विनाश रहितं' सत् 'दिवि' द्योतनात्मके स्व प्रकाश-स्वरूपे व्यवतिष्ठत इति शेषः। (यद्यपि "सत्यं ज्ञानमनन्तं ब्रह्म" इत्याम्नातस्य परब्रह्मणो ह्येयदन्तत्वाभावात् पादचतुष्टयं निरूपयितुमशक्यं, तथापि जगदिदं ब्रह्म-स्वरूपापेक्षया स्वल्पमिति विवक्षितत्वात् पादत्वोपचारः ॥ १४ ॥

अथ षष्ठी।

१ २ २ ३क १ १ २ ३ १ १

तावानस्य(६)महिमाततो(७)ज्यायाꣳश्च पूरुषः(८)

३ ।।२ १ ३क ३र १ ३क ३क १ १ २

उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥३५॥

अतीतानागतवर्त्तमान रूप जगदाद्याधारो योऽस्ति 'तावान्' सर्वोऽपि 'अस्य' पुरुषस्य 'महिमा' स्वकीय-सामर्थ्य-

---

(५) "उतामृतत्वेत्यादि" ऋ०।

(६) "एतावानस्य"—(७) "अतोज्यायांश्च"—

(८) "पादोऽस्येत्यादि" ऋ०

विशेष । न तु तस्य वास्तव स्वरूपम् । वास्तवस्तु 'पुरुष' 'ततो' महिम्नोऽपि 'ज्यायान्' अतिशयेनाधिक इत्यर्थः । 'उत' अपिच 'अमृतत्वस्य' देवत्वस्य 'अयम् ईशान' स्वमायया 'यत्' यस्मात् कारणात् 'अन्नेन' प्राणिना भोग्येन अन्नेन निमित्त भूतेन 'अतिरोहति' स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमान जगदवस्थां प्राप्नोति । तस्मात् प्राणिना कर्म फल भोगाय जगदवस्था स्वीकारात् नेदं तस्य वस्तु तत्त्वमित्यर्थः । ३५ ॥

अथ सप्तमी ।

१ २   २ १ २   २ २ २   २ २ १ २

ततो(८)विराडजायतविराजोअधिपूरुषः ।

२ ३८   ३८   २ ७ अ   २ १ २ २ २

सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥३६॥

"विष्वङ् व्यक्रामत्" इति यदुक्तं तदेवात्र प्रपञ्च्यते-'तत' तस्मादादि पुरुषात् 'विराट्' ब्रह्माण्ड देह 'अजायत' उत्पन्न. । (विविधानि राजन्ते वस्तून्यत्रेति विराट्) 'विराजो अधि' विराड् देहस्योपरि तमेव देहमधिकरणं कृत्वा 'पूरुषं' तद्देहाभि मानी कश्चित् पुमानजायत । योऽयं सर्व वेदान्त वेद्यः परमात्मा स एव स्वकीयया मायया विराड् देह ब्रह्माण्ड-रूप सृष्ट्वा तत्र जीव रूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत् (एतच्चाथर्वणिक उत्तरतापनीये विस्पष्टमामनन्ति—"स वा एष भूतानीन्द्रियाणि विराजं देवता कोशांश्च सृष्ट्वा प्रविश्य मूढो मूढ इव व्यवहरन्नास्ते माययैवेति") 'स जात.' विराट पुरुष 'अत्यरिच्यत' अतिरिक्तोऽभूत् । विराड व्यतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभवत् । पश्चाद्देवादि जीव

(८) "तस्माद्" ऋ० ।

भावादूर्ध्वं भूमिं ससर्जेति शेषः। 'अधो' भूमि-सृष्टेरनन्तरं तेषां लोकानां 'पुरः' सर्वं [पूर्यन्ते सम्भिर्धातुभिरिति पुरः] शरीराणि। २६॥

मन्ये वामिति पञ्चर्चो वामदेवेन वीक्षिताः।
प्रथमैकाग्निमे च द्वे त्रिष्टुभस्तासु चादिमा॥
उपरिष्टाज्ज्योतिरिति [illegible] चैव विधीयते।
अन्ये अनुष्टुभौ द्यावापृथिव्योः प्रथमा तथा॥
द्वितीयेन्द्री चतुर्थी च तृतीयाग्निर्जातमनः।
स्तुतिर्गामग्निमेति छन्दोदैवत निर्णयः॥

अथ अष्टमी।

वामदेवऋषिः। त्रिष्टुप्छन्दः। द्यावापृथिवी देवते।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ १
मन्येवांद्यावापृथिवीसुभोजसौयेअप्रथेथाम

२ ३ १ २ ३ २ १ २ ३ १ २
मितमभियोजनम्। द्यावापृथिवीभवतं

१ ३ २ ३ २ ३ १ २
स्योनेतेनोमुञ्चतमꣳहसः॥२७॥

हे 'द्यावापृथिवी' द्यावापृथिव्यौ। 'वां' युवां 'सुभोजसौ' शोभनपालयिताराविति 'मन्ये' अहं जानामि ये द्यावापृथिव्यौ 'अमितम्' अपरिमितं 'योजनं' [युज्यते पुरुषोऽनेनेति योजनं] धनादि तत् 'अभ्यप्रथेथाम्' अभिविस्तारयतम् हे 'द्यावापृथिवी' द्यावापृथिव्यौ। युवां अस्माकं 'स्योने' सुरूपे सुसुखार्थं 'भवतम्' 'ते' द्यावापृथिव्यौ 'नः' अस्मान् 'अंहसः' पापात् 'मुञ्चतं' मोचयतम्। २७॥

अथ नवमी।

अनुष्टुप्छन्द। इन्द्रो देवता। वामदेव ऋषि।

१ २   २ १ २ २ १ २ २ २ २ १ २

हरीतइन्द्रश्मश्रूण्युतोतेहरितौहरी।

१ २   २ १ २ २ १ २ २ १ २

तंत्वास्तुवन्तिकवयःपुरुषासोवनर्गवः ॥३८॥

हे 'इन्द्र'। 'ते' तव 'श्मश्रूणि' 'हरी' सोम पानेन हरित वर्णानि [तथाच श्रूयते—'इन्द्र श्मश्रूणि हरितानि प्रधुन' इति। "छन्दसि बहुलम्" इति हरि शब्दात्परस्य णेर्लुक्] 'उतो' अपिच। 'ते' 'हरी' अश्वौ 'हरितौ' हरिद्वर्णौ। 'कवय' मेधाविन 'पुरुषास' पुरुषा 'वनर्गव' वननीया भजनीया सेवनीया गावो येषां ते वनर्गव [मध्यरेफश्छान्दसः। गोस्त्रियोरिति ह्रस्वत्व] तादृशा कवय 'तं' 'त्वा' त्वां स्तुवन्ति ॥ ३८ ॥

अथ दशमी।

वामदेव ऋषि। अनुष्टुपछन्द। आयामने विनियोज्या।

२ ३ १ २ १ २   २ १ २ ३ २ १ २ २ २ २ २ १

यद्वर्चोहिरण्यस्ययद्वावर्चोगवामुत। सत्यस्य

१ २ २ २ २ १ २ २ ३ २

ब्रह्मणोवर्चस्तेनमासꣳसृजामसि ॥३९॥

'हिरण्यस्य' हित रमणीयस्य एतन्नामकस्य 'यद्वर्च' तेजो ऽस्ति। 'यद्वा' अपिच। 'गवाम्' एतन्नामकानां 'यद्वर्च' तेजोऽस्ति। 'उत' अपिच। 'सत्यस्य' सर्वं, ममातस्य 'ब्रह्मण' यद्वर्चोऽस्ति तेन तै 'मा' 'सꣳसृजामसि' सम्पादयाम'। धन धन्त पशुमन्त ओजस्विना भवेमेति तात्पर्य्यार्थं। ३९।

अथ एकादशी ।

२ १ २ ३ २ २ २८ २८ १ २
सहस्तंनइन्द्रदध्योजईशेह्यस्यमहतोविरप्-

३ २ २ ॥ २८ १ १ २ २२ २ १
शिन्। क्रतुन्ननृम्णएंस्थविरंचवाजंवृत्रेषुश

३ १ २
त्रूनसुहनाकृधिनः ॥४०॥

हे 'विरप्शिन्' ! विशेषेण रपण मल्य वचनं तद्यस्यास्तीति विरप्शी, तस्य सम्बोधनं हे विरप्शिन् । विशेषेण स्तोत्रविषये मलवाक्य । 'इन्द्र' ! 'ते' तव 'सहः' शत्रूणामभिभवनरूपम् 'ओजः' बलं 'नः' अस्मभ्यं 'दधि' (दधातेश्छान्दसं रूपं लोडि हेर्धिभावादिना) यस्मात् त्वं तस्य 'अस्य' 'महतः' बलस्य 'ईशे' ईश्वरो भवसि । अतो हे इन्द्र ! 'नः' अस्माकं 'क्रतुं न' यज्ञमिव 'नृम्णं' धनं 'स्थविरम्' अतिशयेन प्रहद्धं "वाजं" बलं च 'कृधि' कुरु । किञ्च मोऽस्माकं 'शत्रून्' 'वृत्रेषु' आवरकेषु उपायेषु 'कृधि' कुरु ॥ ४० ॥

अथ द्वादशी ।

२ १ २ ३ १ ३ ३ २ ३ १ २ ३ ३ ३ २
सहर्षभाः सहवत्साउदेतविश्वारूपाणिबिभ्र

२ ३ ३ २ २ ३ २ ३ १८
तीर्द्व्यूध्नीः । उरुःपृथुरयंवोअस्तुलोकइमा

२८ १ २ ३ १ २
आपः सुप्रपाणाइहस्त ॥४१॥

हे 'सहर्षभाः' ! वृषभैः सहिता । 'सहवत्साः' ! वत्सैः

सहिताः' । भावः । "धूम्रौ' सायं प्रातः काले द्विविधान्यूधांसि यासां ता धूम्रौ धूम्राः । 'विश्वा' सर्वाणि नानारूपाणि बिभ्रतीः' बिभ्रत्यः यूयम् 'उदेत' उद्गच्छत समृद्धाः सत्यः आगच्छत । किञ्च । 'उरु' बहु 'पृथु' विस्तीर्णं (उरु पृथुरिति शब्दाभ्याम् आयाम-विस्तारौ उच्येते । 'अयं लोक' 'वः' युष्माकम् 'अस्तु' भवतु । 'इमा आपः' 'इह' लोके भूतले अस्मिन् स्थाने 'सुप्रपाणाः' सुखेन प्रपाणेन पातुं योग्याः सन्तु तस्मादिह वशीभूताः 'स' भवत उपविशतेति पूर्वेण सम्बन्ध ॥ ४१ ॥

इति चतुर्थः खण्डः ।

---

## अथ पञ्चमे खण्डे—

अथ प्रथमा ।

चतुर्दशाग्न आयूंषीत्याद्यास्तत्र जगत्यमी ।
विश्वाद्त्रिष्टुबृचिवमिति गायत्र्यो द्वादशेतराः ।
आद्याग्ने पवमानस्य स्तुतिः सौर्यस्तथोदय ।
ऋषीणां विप्रकीर्णत्वात्तत्र तत्राभिदध्महे ।
शतं वैखानसा एव दृष्टवन्तो महर्षयः ।

१ २ ३ १ २ ३ २ ३ १ ३ १ २
अग्नआयूंषिपवसआसुवोर्जमिषंचनः ।
२ ३ १ २ ३ १ २
आरेबाधस्वदुच्छुनाम् ॥४२॥

हे 'अग्ने' । पवमान रूप ! अस्माकमायूंषि अस्मान्येतन्नामकानि वा 'पवसे' करोषि 'नः' अस्माकम् 'ऊर्जम्' अन्नरसम्

'इयम्' धर्म' च 'घासुव' आभिमुख्येन प्रेरय। किञ्च। 'दुष्ष्वप्नां' (रक्षोनामैतत्) रक्षांसि 'आरे' अस्मत्तो दूर 'बाधस्व' सम्पीड़य॥ ४२॥

अथ द्वितीया।

वभ्राण्नामक पता तु सूर्य्यपुत्रो रदर्श सः।

१ २ ३ १ २ ३ २ ३क २ ३ १ २ ३ १ ३ १
विभ्राड्बृहत्पिबतु सोम्यंमध्वायुर्दधद्यज्ञपता
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १
वविह्रुतम्। वातजूतोयोअभिरक्षतित्मनाप्रजाः
१ २ ३ १ २ ३ २
पिपर्त्तिबहुधाविराजति ॥४३॥

'विभ्राट्' विभ्राजमानः विशेषेण दीप्यमानः सूर्य्य 'बृहत्' परिदृढ़' 'सोम्य' सोममय 'मधु' पिबतु। किं कुर्वन्? 'यज्ञपतौ' यजमाने 'अविह्रुतम्' अकुटिलम् अकपटकम् आयु' दधत् धन' वा कुर्वन्। 'यः' सूर्य्यः 'वातजूतः' वातेन वायुना प्रेर्य्यमाणः सन् 'त्मना' आत्मना स्वयमेव अभिरक्षति सर्व्वं जगदभिमुखम् पालयति (राशि चक्रस्य वायुप्रेर्य्यत्वात् सूर्य्यस्यापि तत्प्रेर्य्यत्वम्) स सूर्य्यः 'प्रजाः' पिपर्त्ति' (१०) हव्यादि प्रदानेन पूरयति पालयति वा 'बहुधा' 'विराजति' विशेषेण दीप्यते च॥ ४३॥

अथ तृतीया।

कुत्सः।

१ २ ३ १ २ ३ १ २ ३ १ ० १ २ ३ २ ३ १ २ ३
चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुण-

(१०) 'पिपर्त्ति"-"पुपोष"-इति, "बहुधा" "पुरुधा" इति च पाठौ॥

२ २       २ १ ३ २ २ ३ १ २ ३ १
स्याग्नेः। आप्राद्यावापृथिवीअन्तरिक्षꣳसू-
२ २ ३१ २ २ २ १ २
र्य्यआत्माजगतस्तस्थुषश्च ॥४४॥

'देवानां' दीव्यन्तीति देवा रश्मयः, तेषां देवानामेव वा प्रसिद्धानाम् 'अनीकं' तेजःसमूहरूपं 'चित्रम्' आश्चर्य्यकरं सूर्य्यमण्डलम् 'उदगात्' 'उदयाचलं प्रयासीत्। कीदृशं? 'मित्रस्य वरुणस्याग्नेश्च' (चक्षुरुपलक्षणमेतत्) एतदुपलक्षितानां जगतां 'चक्षुः' प्रकाशकं चक्षुरिन्द्रियस्थानीयं वा। उदयं प्राप्यैव 'द्यावापृथिवी' दिवं च पृथिवीं च अन्तरिक्षं च 'आप्राः' स्वकीयेन तेजसा 'आ' समन्तात् अपूरयत्। ईदृग्भूतमण्डलान्तरवर्त्ती सूर्य्यः अन्तर्य्यामितया सर्वस्य प्रेरकः परमात्मा 'जगतः' जङ्गमस्य 'तस्थुषः' स्थावरस्य च 'आत्मा' स्वरूप-भूतः स हि सर्वस्य स्थावर-जङ्गमात्मकस्य कार्य्य-वर्गस्य (कारणाच्च कार्य्यं नातिरिच्यते। तथाच पारमर्षसूत्रं—"तदनन्यत्वमारम्भण शब्दादिभ्यः"-इति। यद्वा। स्थावर-जङ्गमात्मकस्य सर्वप्राणि जातस्य जीवात्मा। उदिते हि सूर्य्ये मृतप्रायं सर्वं जगत् पुनश्चेतन-युक्तं सत् उपलभ्यते। तथाच श्रूयते—"योऽसौ तपन्नुदेति सर्वेषां भूतानाम्। प्राणानादायोदेतीति ॥ ४४ ॥

अथ चतुर्थी।

आयङ्गौः पृश्निरित्यस्य सार्पराज्ञी समैक्षत।
ऋचस्तिस्रो भवेदासां विकल्पेनात्मदेवता ॥

३२       २२   २ ३ १ २   २ ३ १ २
आयंगौःपृश्निरक्रमीदसदन्मातरं

२२ २-१२ २१ २ ।
पुरः। पितरंचप्रयन्त्स्वः ॥४५॥

। 'गौ' गमनशील 'पृश्नि' प्राष्टवर्ण व्याप्ततेजा 'श्रयं' सूर्य्यं 'आक्रमीत्' आक्रान्तवान् उदयाचल प्राप्तवानित्यर्थः। आक्रम्य च 'पुर' पुरस्तात् पूर्वस्यां दिशि 'मातरं' सर्वस्य भूतजातस्य निर्मात्रीं 'भूमिम्' 'असदत्' आसीदति प्राप्नोति (सदेर्लुङ्यन्दसो लेट्। लृदित्वात् पुषादित्वादङादेश) तत 'पितरं' पालक द्युलोक,'च' शब्दादन्तरिक्षं 'प्रयन्' प्रकर्षेण शीघ्र गच्छन् 'स्व' सु अरस शोभन गमनो भवति। यद्वा। पितरं स्वर्लोक प्रवर्त्तते ॥ ४५ ॥

अथ पञ्चमी।

१ २ २ २७ २ १ २ २२
अन्तश्चरति रोचनास्य प्राणादपानती।

१७ २ ।र १र
व्यख्यन्महिषोदिवम् ॥४६॥

'अस्य' सूर्य्यस्य 'रोचना' रोचमाना दीप्तिरन्त शरीर मध्ये मुख्य प्राणात्मना 'चरति' वर्त्तते। किं कुर्वती? 'प्राणाद पानती' ( मुख्य प्राणस्य प्राणाद्या पञ्च वृत्तय । तत्र प्राणन नाडीभिरूर्ध्व वायोर्निर्गमन ) तथाविधात्प्राणात् प्राणनादनन्तरम् अपानती (अपाननं नाडीभिरवाङमुख वायो र्नयन) तत् कुर्वती ( अपपूर्वादनितेर्लट शतृ, अदादित्वा च्छपो लुक्। उगितश्चेति ङीप्। शतुरनुम इति नद्या उदात्तत्वम्)।

यद्वा। 'अन्त.' द्यावापृथिव्योर्मध्ये "अस्य" सूर्य्यस्य "रोचना" रोचमाना दीप्ति "चरति" गच्छति ( रुच दीप्तौ।

अनुदात्तेतश्च हलादेरिति युच्) किं कुर्वती ? "प्राणात्" प्राणनादुदयादनन्तरम् 'अपानती' सायाह्नसमये अस्तङ्गच्छन्ती। (ईदृश्या दीप्त्या युक्त) अतएव 'महिष' महान् सूर्य्यं 'दिवम्' अन्तरिक्ष उदयास्तमयोर्मध्ये 'व्यख्यत्' विशिष्टं प्रकाशयति (महेरिच् महेष्टिषचिति औणादिकष्टिषच्प्रत्यय। अचिर ख्याञ् छान्दसे लुङि अस्यतिवक्तिख्यातीत्यादिना च्लेरङादेश ॥६॥

अथ षष्ठी।

३ २उ ३ १२ ३ १ २ ३१ २

त्रिंशद्धामविराजतिवाक्पतंगायधी

२ ३ १ २ ३ १ ३

यते। प्रतिवस्तोरहद्युभिः ॥४७॥

'त्रिंशद्धाम' धामानि स्थानानि (वचनव्यत्यय) 'वस्तो' वासरस्य अहोरात्रस्यावयवभूतानि। 'अह' शब्दोऽवधारणे। 'द्युभि' सूर्य्यस्य दीप्तिभिरेव विराजति विराजते विशेषेण दीप्यते (व्यत्ययेनैकवचनम्। सुब्व्यत्ययेन धामान्युच्यन्ते। पञ्चदशाहे पञ्चदशाह) 'पतङ्गाय' पतति गच्छतीति पतङ्ग सूर्य्यं तस्मै सूर्य्याय स्तुतिरूपा 'वाक्' 'प्रतिधीयते' प्रतिमुख्य स्तोत्रभिर्विधीयते क्रियते [यद्वा 'वस्तो' अह 'त्रिंशत् धाम' धामानि (घटिकाभिप्रायमेतत्) त्रिंशद्घटिका (अत्यन्तसंयोगे द्वितीया) एतावत्कालं 'द्युभि' दीप्तिभिरसौ सूर्य्यं 'विराजति' विशेषेण दीप्यते। तस्मिन्नेव समये 'वाक्' त्रयीरूपा तस्मै 'पतङ्गाय' 'प्रतिधीयते' प्रतिमुख्य धार्य्यते ॥ पूर्वं मेवंस्त इत्यर्थः। [श्रूयते हि "ऋग्भि पूर्वाह्णे दिवि देव ईयते, यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्य्य" इति। यद्वा त्रिंश मुह

सांपरायिका मोक्षस्तत्प्रदा सूर्यात्मना स्तूयत इत्यवगन्तव्यम् ॥ ४७ ॥

अथ सप्तमी ।

२ ३ १ २ ३ १ ३ २ ३ १ २

अपत्येतायवोयथानक्षत्राएयन्त्यक्तुभिः ।

३ २ ३ १ २

सूरायविश्वचक्षसे ॥४८॥

'त्ये' 'तायवः' 'यथा' प्रसिद्धास्तस्करा इव 'नक्षत्राणि' देवगृहरूपाणि ("देवगृहा वै नक्षत्राणि" इति श्रुत्यन्तरात्) यद्वा, इह लोके मानुषा ये स्वर्गमाप्नुवन्ति ते नक्षत्ररूपेण दृश्यन्ते। तथाच—श्रूयते—'यो वा इह यजते अमुं स लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वम्' इति। यद्वा, तेषां सुकृतिनां ज्योतींषि नक्षत्राण्युच्यन्ते। 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' इत्याम्नायात्। यास्कश्चाह—'नक्षत्राणि नक्षतेः गतिकर्मणो नेमानि क्षत्राणीति च ब्राह्मणम्' इति) तानि विधानि नक्षत्राणि 'अक्तुभिः' रात्रिभिः सह 'अपयन्ति' अपगच्छन्ति। 'विश्वचक्षसे' विश्वस्य सर्वस्य प्रकाशकाय 'सूराय' सूर्यस्य आगमनं दृष्ट्वेति शेषः (तस्करा नक्षत्राणि च रात्रिभिः सह सूर्ये आगमिष्यतीत्याकुलायन्त इत्यर्थः। तायुरिति स्तेननाम। तायुस्तस्कर इति तन्नामसु पाठात्। अक्तुरिति रात्रिनाम। शर्वरी अक्तुरिति तन्नामसु पाठात् ॥ ४८ ॥

अथाष्टमी

३ २ ३ १ २ ३ १ २ ३ २ ३ २

अदृश्रम(१)स्य केतवोविरश्मयोजनाए

---

(१) "अदृश्रन्"—"अदृश्रम्" इति पाठौ ॥

यद्वा, हे "सूर्य्य!" सवितृरूपतया सर्वस्य प्रेरक परमात्मन्! "तरणि" संसाराब्धेस्तारकोऽसि। यस्मात् त्वं 'विश्वदर्शतः' विश्वैः सर्वैर्मुमुक्षुभिर्दर्शनीयो द्रष्टव्य आत्मा साक्षात्कर्तव्य इत्यर्थः [अधिष्ठानसाक्षात्कारे हि आरोपितं निवर्त्तते] ज्योतिषः सूर्य्यादेः कर्त्ता [तथाम्नायते—"चन्द्रमा मनसो जातश्चक्षोः सूर्य्यो अजायत" इति] इदृशस्त्वं चिद्रूपतया 'विश्वं' सर्वं इदं जातं 'रोचमानं' दीप्यमानं यथा भवति तथा 'आभासि' प्रकाशयसि [सैव व्याकरणे हि सर्वं जगत् दृश्यते। तथाचाम्नायते—"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति॥ ५०॥

अथ दशमी।

१२ ३१२ १ २ ३१२ ३१२३१

प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मा

१ १ २ ३१२३१

नुषान्। प्रत्यङ् विश्वं स्वर्दृशे॥५१॥

हे सूर्य्य! त्वं 'देवानां 'विशः' मरुदाख्यान् देवान् ["मरुतो वै देवानां विशः" इति श्रुत्यन्तरात्। तानुद्दिश्य 'प्रत्यङ् उदेषि' प्रतिगच्छन्नुदयं प्राप्नोषि। तेषामभिमुखं यथा भवति तथेत्यर्थः। तथा 'मानुषान्' मनुष्यान् प्रत्यङ् उदेषि। तेऽपि यथा तदभिमुख एव सूर्य्य उदेतीति मन्यन्ते तथा। 'विश्वं' सर्वं 'स्वः' स्वर्लोकं 'दृशे' द्रष्टुं 'प्रत्यङ् उदेषि। यथा स्वर्लोकवासिनो जनाः स्वाभिमुखेन पश्यन्ति तथा उदेषीत्यर्थः [एतदुक्तं भवति—ये लोकाः पश्यन्ति तं जनाः सर्वेऽपि स्वाभिमुखेन सूर्य्यं पश्यन्तीति। तथाचाम्नायते—'तस्मात् सर्व एव मन्यते मां प्रत्युदगात्' इति॥५१॥

अथ एकादशी।

१ २ २ ३ १ २   २ २ २ ३ २

येनापावकचक्षसाभुरण्यन्तंजनाँ

१ १ १ २ २ १ २

अनु। त्वंवरुणपश्यसि ॥५२॥

हे 'पावक !' सर्वस्य शोधक ! 'वरुण !' अनिष्ट वारक सूर्य ! त्वं 'जनान्' प्राणिनः 'भुरण्यन्तं' धारयन्तं पोषयन्तं वा इमं लोकं येन 'चक्षसा' प्रकाशेन अनुपश्यसि अनुक्रमेण प्रकाशयसि तं प्रकाशं स्तुम इति शेषः। [यद्वा। उत्तरस्यामृचि सम्बन्धः, तेन चक्षसा उदेतीति। तथा च यास्केनोक्तं — 'तत्ते वयं स्तुम इति वाक्यशेषोऽपि वोत्तरस्यामन्वयस्तेन व्याख्यातीति' ॥५२॥

अथ द्वादशी।

१२ १२ ३ १ २ ३ २ ३ १ ३   ३

उद्या(२)मेषिरजः पृथ्वहामिमानोअ

१ २ २ ३ १ २

क्तुभिः। पश्यंजन्मानिसूर्य्य ॥५३॥

हे 'सूर्य !' त्वं 'पृथु' सुविस्तीर्णं 'रजः' लोकं ["लोका रजांस्युच्यन्ते" इति यास्कवचनात्] द्युलोकं 'द्याम्' अन्तरिक्षलोकम् 'उदेषि' उद्गच्छसि। किं कुर्वन् ? 'अहानि' 'अक्तुभिः' रात्रिभिः सह 'मिमानः' कल्पयन् [आदित्यगत्यधीनत्वादहोरात्रविभागस्य] तथा 'जन्मानि' जननवन्ति भूतजातानि 'पश्यन्' प्रकाशयन्। ५३॥

---

(२) "द्याम्" — "विद्याम्" इति पाठौ।

अथ त्रयोदशी ।

**अयुक्तसप्तशुन्ध्युवः सूरोरथस्यनप्त्यः**

**ताभिर्यातिस्वयुक्तिभिः ॥५४॥**

'सूर' सर्वस्य प्रेरक सूर्य, 'शुन्ध्युवः' शोधिका स्त्रियः। तादृशी सप्त सप्त संख्याका 'अयुक्त' स्व रथे यान्। कीदृशी? 'रथस्य' 'नप्त्य' नपातयित्र्य। रथो याति न पतति ईदृशीरित्यर्थः। आभिः स्वयुक्तिभि स्वकीय-योजनेन रथे युक्ताभिः सह गच्छति। अतस्तस्मै हविर्दातव्यमिति शेषः ॥ ५४ ॥

अथ चतुर्दशी ।

**सप्तत्वाहरितोरथेवहन्तिदेवसूर्य ।**

**शोचिष्केशंविचक्षण ॥५५॥**

हे 'सूर्य!' 'देव!' द्योतमान! 'विचक्षण'! सर्वस्य प्रकाशयितः। 'सप्त' सप्त-संख्याका 'हरित' अश्वा रस-हरणशीला रश्मयो वा 'त्वा' त्वां 'वहन्ति' प्राप्नुवन्ति। कीदृशम् 'रथे' अवस्थितमिति शेषः। तथा 'शोचिष्केश' शोचींषि ज्वालैव यस्मिन् केशा इव दृश्यन्ते स तथोक्तस्तमिति ॥ ५५ ॥

इति श्रीमद्भगवत्कुथुमर्षिप्रादुष्कृता
सायणाचार्यकृतभाष्यसहिता सामवेदीया
आरण्यकसंहिता समाप्ता ।

---

